आदौ मुख्यवार्ताः

१. नीतीशः कुमारः सप्तमवारं बिहारस्य मुख्यमन्त्री पदम् अलङ्करिष्यति । पटनायाम् एनडीएसङ्घटनस्य नवनिर्वाचितैः विधायकैः श्रीकुमारः स्वनेतृरूपेण चितः ।
२. प्रधानमन्त्रिणा नरेन्द्रमोदिना स्वतन्त्रतासेनानिनः बिरसामुण्डायाः जन्मजयन्त्याः अवसरे श्रद्धाञ्जलिः अर्पिता ।
३. भारतेन नियन्त्रणरेखायां पाकिस्तानस्य अकारणं सङ्घर्षविरामोल्लङ्घनोपरि महद्रोषः प्रकटीकृतः ।
४. देशे कोविड् नवदशमहामार्याः स्वस्थतामुपगतानां प्रतिशतं त्रिनवति दशमवलं शून्य-नव-प्रतिशतं जातम् । अपि च
५. लोकप्रियः अभिनेता सैमित्रचटर्जी अद्य कोलकातायां दिवङ्गतः ।

अधुना वार्ता विस्तरेण

१. नीतीशकुमारः बिहारस्य नवमुख्यमन्त्री भविष्यति । शपथग्रहणसमारोहः श्वः भविष्यति । राज्यपालः श्रीफागूचौहानः श्रीकुमारं तथा च तस्य मन्त्रिमण्डलस्य सदस्यान् पदस्य गोपनीयतायाः च शपथं दापयिष्यति ।
नीतीशकुमारः सर्वसम्मत्या एनडीएसङ्घटनस्य नेता चितः । पटनायां एनडीएसङ्घटनस्य संयुक्तोपवेशने एषः निर्णयः कृतः । एतस्मात् पूर्वं श्रीकुमारः जनतादलयूनाइटेड्विधायकैः स्वनेता चितः । मुख्यमन्त्रिणः नीतीशकुमारस्य सर्वकारीयावासे इदमुपवेशनम् आहूतम् आसीत् । रक्षामन्त्री राजनाथसिंहः पर्यवेक्षकत्वेन अस्मिनुपवेशने उपस्थितः आसीत् । केन्द्रीयमन्त्री नित्यानन्दरायम् अतिरिच्य बिहारविषयाणां प्रभारी भूपेन्द्रयादवः निर्वाचनप्रभारी देवेन्द्रफडणवीसः तथा च बिहारभाजपाध्यक्षः सञ्जयजायसवालः अपि उपवेशने उपस्थिताः आसन् ।
हिन्दुस्त्तान-अवाम-मोर्चादलस्य अध्यक्षः जीतनराममांझी तथा च विकासशील-इंसान-पार्टी इत्यस्य प्रमुखः मुकेशः साहनी अपि उपवेशने उपस्थिताः आसन् ।

एनडीएसङ्घटनस्य सर्वाणि अपि चत्वारि दलानि मिलित्वा सर्वकारसङ्घटने विचारं कृतवन्तः । उपमुख्यमन्त्रिपदम् अतिरिच्य विधानसभायाः अध्यक्षचयनस्य तथा च अन्येषां विषयाणाम् उपरि चर्चा जाता ।
सुशीलकुमारमोदी अद्य भाजपादलस्य विधायकनेतृरूपेण चितः । एतस्मात् पूर्वं जनतादलयूनाइटेड् हिन्दुस्तान-आवाम-मोर्चा तथा च विकासशील-इंसान-पार्टी इत्येतैः दलैः स्वस्वदलनेतृणां चयनाय उपवेशनानि आसन् ।
सद्य एव विधानसभानिर्वाचनेषु एनडीएसङ्घटनेन पञ्चविंशत्युत्तरशतम् आसनानि विजित्य पूर्णं बहुमतं प्राप्तम् अस्ति । एकेन निर्दलविधायकेन सुमितसिंहेन अपि एनडीएसङ्घटनाय स्वसमर्थनं दत्तम् अस्ति ।

२. प्रधानमन्त्री नरेन्द्रमोदी एवञ्च उपराष्ट्रपतिः एम्.वेंकेयानायडू जनजातीयस्वतन्त्रतासेनानिनः बिरसा मुण्डायाः जन्मदिवसे श्रद्धाञ्जली अर्पितवन्तौ । श्रीनायडू ट्वीट् माध्यमेन उक्तवान् यत् धरतीआबाइति नाम्ना प्रसिद्धः बिरसा मुण्डा आङ्ग्लीयानां दमनस्य विरुद्धं जनजातिजनान् एकत्रीकृतवान् । तेनोक्तं यत् बिरसामुण्डायाः साहसः दृढनिश्यश्च अन्यायपूर्ण-औपनिवेशिकशासनस्य विरुद्धं जनजातिजनान् एकत्रीकृतवान् । उपराष्ट्रपतिना उक्तं बिरसा मुण्डा जनजातिजनानाम् अधिकारसंरक्षणाय सर्वदा संस्मरिष्यते ।
श्रीनायडू झारखण्डस्य जनतायै राज्यस्थापनादिवसस्य शुभकामनाः प्रदत्तवान् । तेनोक्तं यत् वनानां भूमिः झारखण्डः खनिजसम्पदां भूमिः तथा च अस्य क्षेत्रस्य जनाः राष्ट्रनिर्माणाय विभिन्नक्षेत्रेषु निरन्तरं योगदानं ददति ।
प्रधानमन्त्री अपि ट्वीट् द्वारा बिरसामुण्डायाः जन्मदिवसोपलक्ष्ये तस्मै श्रद्धाञ्जलिम् अर्पितवान् । प्रधानमन्त्रिणा उक्तं यत् बिरसामुण्डा वास्तविकार्थेषु निर्धनजननायकः आसीत् तथा च तेन समाजस्य वञ्चितानां पीडितानां च जनानां हिताय कार्यं कृतम् । श्रीमोदिना उक्तं यत् स्वतन्त्रतान्दोलने तस्य योगदानं तथा च सामाजिकसद्भावं प्रति प्रयत्नाः जनान् सदैव प्रेरयिष्यन्ति ।प्रधनमन्त्री झारखण्डस्य जनतायै राज्यस्थापनादिवसस्य अपि शुभकामनाः प्रदत्तवान्।

३.भारतेन पाकिस्तानसम्मुखं कठोरविरोध: प्रदर्शित:।नियन्त्रणरेखायां शुक्रवासरे अकारणमेव प्रारब्धं संघर्षविरामोल्लंघनमवलम्ब्य भारतेन एष: विरोधपरक: पदक्रम: उत्थापित:।विदेशमंत्रालय: पाकिस्तानीय-उच्चायोगस्य उप-उच्चायुक्तं समाहूय ऐषम: त्रयोदश्यां तिथौ दुरापादिताक्रमणं विरुद्ध्य स्वीयां कठोरप्रतिक्रियां अभिवव्यत्तवान्।ध्येयमस्ति यत् उक्तदिनांके जम्मू-कश्मीरस्य नैकेषु क्षेत्रेषु पाकिस्तानपक्षत: गोलिकाप्रहारा: विहिता आसन्।अत्र प्रहारे नागरिकचतुष्टयं आसीत् दिवंगतम्।त्रयोदश अन्ये च व्रणिता: संजाता:।भारतेन सबलं प्रतिपादितं यत् पाकिस्तानभटै: निरपराधिनां नागरिकाणां हननं भृशं निन्दनीयं कार्यजातमस्ति।

४.देशे कोरोना-संक्रमणात् स्वस्थीभूतानां संख्या प्रवर्ध्य त्रिणवतिदशमलव-शून्यनवपरिमितास्ति संवृत्ता।विगते नक्तंदिवे भूयोपि द्विचत्वारिंशतसहस्रं महामारिपीडिता: चिकित्सावकाशं गता:।
स्वास्थ्यमंत्रालयेन विज्ञापितं यत् विषाणो: आरोग्यमाप्तवतां जनानां संख्या समेध्य सम्प्रति द्व्यशीतितोप्यधिका संजातास्ति।भारते नूतनत्वेन संक्रमणग्रस्तानां मानं सम्पूर्णसंख्यापेक्षया पंचदशमलवचतुश्चत्वारिंशन्मितम् एवास्ति अवशिष्टम्। इदानीं भारते महामार्या: सक्रियप्रकरणानि सन्ति नवसप्तत्युत्तरचतु:लक्षसंख्याकानि।
स्वास्थ्यमंत्रालयानुसारि प्रशासनेन यथासमयं यथावश्यकं विहितेन प्रभाविरणनीते: सफलक्रियान्वयनेनैव स्वस्थतांगतानां मितौ महत्परिष्कारो दरीदृश्यते, मृत्युमितौ च अपचिति: परिलक्ष्यते।इदानीं देशे संक्रमणेन कालकवलितानां प्रतिशतता एकदशमलव चतु:सप्त परिमिता विद्यते।
मानमिदम् विश्वापेक्षया वर्तते न्यूनतमम्।विगतासु चतुर्विंशतिहोरासु सप्तचत्वारिंशदुत्तर-चतु:शतं संक्रमिता: प्राणान् अत्यजन्। इत्थम् अद्यावधि मृतकानां संख्या आहत्य पंचत्रिंशदुत्तर-षट्शताधिक-ऊनत्रिंशज्जना: पंचत्वे निलीना:।अपरत: भारतीय-आयुर्विज्ञान-अनुसंधान-परिषदानुगुणं गते अहोरात्रे भूयोपि पंचलक्षोत्तर-अष्ट-संख्याकानि कोरोना-प्रतिदर्श-परीक्षणानि विहितानि।एवं अद्यावधि राष्ट्रे अष्टचत्वारिंशल्लक्षोत्तर-द्वादशकोटिपरीक्षणानि संजातानि।

५.दादासाहेब फाल्के पुरस्कारेण बहुमानित: लोकप्रियोभिनेता सौमित्र चैटर्जीवर्य: अद्य निधनं उपगत:।पंचाशीतिवर्षीय: सौमित्रवर्य: कोलकाताया: एकस्मिन् चिकित्सालये प्राणैर्वियुक्त:।कोरोनासंक्रमित: चैटर्जीवर्य: गतमासस्य षष्ठे दिनांके चिकित्सालये प्रवेशित आसीत्।चिकित्सालयस्य सूत्रानुसारि संक्रमणात् असौ विमुक्त: संजात:, किंच नानारोगदुष्प्रभावकारणं हि मृत्युबन्ध:। अवधेयास्पदमस्ति यत् सौमित्र चैटर्जी आकाशवाणी- कोलकाता-केंद्रे उद्घोषकत्वेन निजकार्यकालं समारभत।तत्रैव अपुरसंसाराख्ये चलच्चित्रे निजाभिनयकौशलप्रदर्शनबलेन अमुना भारतीयचलच्चित्रजगति प्रवेशो लब्ध:।चलच्चित्रं इदम् 'सत्यजीत रे' वर्यस्य निर्देशने निर्मितं आसीत्। यस्मिन् अपुपात्रत्वेन चैटर्जीवर्यस्य अभिनय: आसीत्।रुग्णावस्थाया: प्राक् असौ चलच्चित्रजगति
सक्रिय: अवर्तत।रंगमंचस्य प्रख्यात: व्यक्तित्व:, कविश्च सौमित्रचटर्जी प्रशसंकेषु लोकप्रिय: आसीत्।बंगालस्य सांस्कृतिकजगति असौ महा प्रसिद्ध: अवर्तत।देशे विदेशेषु चापि असौ नैकपुरस्कारै: उपायनीकृतो जात:।
येषु पद्मभूषणपुरस्कार:, फ्रांसस्य सर्वोच्च नागरिकपुरस्कार 'लिजन ऑफ ऑनर' इत्यपि सम्मिलितोस्ति।